अथ

# वरदगणेशपूजा

प्रारभ्यते

संस्करण : दिसंबर २००६, सम्वत् २०६३

मूल्य १० रुपये मात्र।



मुद्रक एवं प्रकाशक:

**खेमराज श्रीकृष्णदास,™**

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
मुंबई - ४०० ००४.

Printers & Publishers
**Khemraj Shrikrishnadass**
Prop: Shri Venkateshwar Press
Khemraj Shrikrishnadass Marg,
7th Khetwadi, Mumbai - 400 004.

Web Site : http://www.khe-shri.com
E-mail : khemraj@vsnl.com

Printed by Sanjay Bajaj for M/s Khemraj Shrikrishnadass
Prop. Shri Venkateshwar Press, Mumbai-400004,
at their Shri Venkateshwar Press, 66 Hadapsar Industrial Estate.
Pune -411 013.

श्रीगणेशायनमः ॥ ॥अथ भाद्रशुक्ल चतुर्थ्यां वरदगणेशपूजनम् । आचम्य प्राणानायम्य । देशकालौसंकीर्त्य० मम संभावितसकलारिष्टनिवृत्त्यर्थं आयुरारोग्यैश्वर्य्याभिवृद्ध्यर्थं अविघ्नपूर्वकसकलकार्य्यसिद्ध्यर्थं स्वचिंतितमनोरथावाप्त्यर्थंसकलविद्यासिद्ध्यर्थं सुबुद्धिसत्कीर्तिसकलभोगानुभवधनधान्यसमृद्ध्यर्थं आयुष्यस्वरूपसगुणानेकसुपुत्रावाप्त्यर्थंसमस्तवैरिविनाशश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मूलमंत्रेण पुराणोक्तमंत्रेण च श्रीमहागणपति प्रीत्यर्थं भाद्रपदशुक्ल-

प्रतिपद्दिनमारभ्य भाद्रपदशुक्लचतुर्थीपर्य्यन्तं श्रीमहागणपतिप्रतिष्ठापनंपूजनञ्च करिष्ये । तथाच आसनादिकलशार्चनंचकरिष्ये । तथा च प्राणप्रतिष्ठापनं च करिष्ये । पृथ्वीति० आसनम् ।ॐ अस्य श्रीप्राणापतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुः सामानि छंदांसिपराप्राणशक्तिर्दैवता आंबीजं० ह्रींशक्तिः० क्रौंकीलकं० अस्यश्रीमहागणपतेः प्राणप्रतिष्ठापने विनियोगः ॥ आंह्रींक्रों अंयंरंलंवंशंषंसं हंसःसोहं अस्याः श्रीमृत्तिकागणपतिप्रतिमायाः

प्राणाइह प्राणाः जीव इह स्थितः सर्वेन्द्रि-
याणि वाङ् मनस्त्वक्चक्षुः श्रोत्रजिह्वाघ्राण-
वाक्पाणिपादपायूपस्थानि इहैवागत्य सुखं
चिरंतिष्ठंतुस्वाहा॰ असुनीते पुनरस्मासुचक्षुः
पुनः प्राणमिहनोधेहि भोगम् ॥ ज्योक् पश्येम
सूर्य्यमुच्चरन्तं मनुमतेमृडयानः स्वस्ति॰
चत्वारि वाक् परिमितापदानितानिविदुर्ब्राह्मणा
ये मनीषिणः ॥ गुहात्रीणि निहिता नेंगयंति
तुरीयं वाचो मनुष्या वदंति ॥ गृहा वै प्रतिष्ठा
सूक्तं तत्प्रतिष्ठिततमया वाचा शंस्त॰यंतस्माद्य-

द्यपि दूर इव पशूँल्लभते गृहान्नैवैनाना जिग- मिषति गृहा हि पशूनांप्रतिष्ठा प्रतिष्ठा ॥ सुप्रतिष्ठितमस्तु सुमुहूर्तमस्तु । सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायण ऋषिः जग- द्बीजपुरुषो देवता अनुष्टुप्छन्दः अंत्या त्रिष्टुप् शरीरशुद्ध्यर्थं पुरुषसूक्तन्यासे विनि- योगः पुरुषसूक्तेन न्यासान्कुर्य्यात् । गणा- नांत्वा इतिषडंगन्यासं कुर्यात् । कलशस्य मुखे विष्णुरिति कलशपूजा० शंखादौ चंद्रदैव त्यं० इतिशंखपूजा० आगमार्थंतुदेवानां० इतिघंटापूजा० अपवित्रः पवित्रो वा इति

पूजाद्रव्याणिसंप्रोक्ष्य ॥ अथपीठ पूजा॰
पूकदंतायनमः शूर्पकर्णायनमः पाशांकु-
शायनमः वरदाभयहस्तायनमः लंबोदराय-
नमः त्रिनेत्रायनमः पाशांकुशधरायनमः
सर्वाभरणाभूषितायनमः पीठकर्णिकामध्ये
महागणपति पीठासनायनमः अष्टभैरवायनमः
असितांगभैरवायनमः रुरुभैरवायनमः चंड-
भैरवायनमः क्रोधभैरवायनमः उन्मत्तभैरवाय-
नमः भीष्मभैरवायनमः कालभैरवायनमः
संहारभैरवायनमः । मध्ये । महागणपतये-
नमः । ततः अष्टौलोकपालाः इन्द्रायनमः

अग्नयेनमः यमायनमः नैर्ऋतयेनमः वरुणा-
यनमः वायवेनमः सोमायनमः ईश्वरायनमः
अथगणपतिचतुष्टयम्० ॐ गणपतयेन० ॐ
दुर्गायैनमः ॐ क्षेत्रपालायनमः ॐ वास्तो-
ष्पतयेनमः ॥ अथध्यानम् ॥ एकदंतंशूर्पक-
र्णंगजवक्त्रंचतुर्भुजम् ॥ पाशांकुशधरंदेवंध्या-
येत्सिद्धिविनायकम् ॥ इतिध्यानम् ॥ सहस्र
शीर्षेतिऋक् उमा पुत्रनमस्तेस्तुउमामलसमु-
द्भव ॥ इमां मयाकृतांपूजांगृह्णीष्वसुरसत्तम १॥
आवाहनम् । पुरुषएवेदंसर्वंऋक्० अनेकरत्न-

खचितंमुक्ताहारैर्विभूषितम् ॥ स्वर्णसिंहासनं चारुप्रीत्यर्थंप्रतिगृह्यताम् ॥ आसनम् ॥ एता-वानस्यमहिमाऋक् ॥ गजवक्त्रनमस्तेऽस्तुगंध पुष्पाक्षतैर्युतम् । भक्त्या समर्प्पयेतुभ्यंगृह्णीष्व-सुरसत्तम ॥ पाद्यम् ॥ त्रिपादूर्ध्वउदैत्पुरुषः ऋक् ॥ गौरीप्रियनमस्तेस्तु शंकरप्रिय सिद्धिद ॥ गृहाणार्घ्यंमया दत्तं सर्वविघ्नहरो-भव ॥ अर्घ्यंसमर्प्पयामि ॥ तस्माद्विराडजयात ऋक्० ॥ गंगाजलं समानीतं सुर्वणकलशे-स्थितम् ॥ आचम्यतांसुरश्रेष्ठ गृहाणाचमनं

तथा ॥ इत्याचमनीयम् ॥ यत्पुरुषेणहविषा ऋक् ॥ दधिमध्वाज्यसंयुक्तं सुवर्णकलशे शुभम् ॥ मधुपर्कं मयादत्तं सर्वकामफल प्रदम् ॥ इति मधुपर्कम् ॥ अथ पंचामृत स्नानम् ॥ ॐ आप्यायस्व समे तुते० ऋक् ॥ पयः स्नानंस० ॐ दधिक्राव्णो अकारिषं ऋक् ॥ दधिस्नानं० घृतं मिमिक्षे ऋक् ॥ घृतस्नानंस० मधुवाता ऋतायत इत्यनेनमधु-स्नानम् ॥ ॐ स्वा दुःपवस्वऋक् ॥ शर्करा-स्नानम् ॥ ॐ आपोहिष्ठेति शुद्धोदकस्नानम्॥

आचमनीयम् ॥ तंयज्ञंबर्हिषिप्रोक्षन्० रक्तव
स्त्रद्वयं देवदेवांग सदृशंप्रभो ॥ भक्त्यादत्तंगृहा-
णेदंसर्वपापहरोभव ॥ इतिवस्त्रं ॥ तस्माद्यज्ञा-
त्सर्वहुतः संभृतंपृषदाज्यं० इति ब्रह्मसूत्रंचकां-
चनम् ॥ चोत्तरीयकम् ॥ गृहाण चारु
सर्वज्ञ भक्त्या आनन्ददायक ॥ यज्ञोपवीतं०
गंधंकर्पूरसंयुक्तं दिव्यचंदनचर्च्चितम् ॥ विले-
पनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् ॥ श्रीखंडं
चंदनं दिव्यं इति चन्दनम् ॥ अक्षताश्च सुर-
श्रेष्ठ इत्यनेन अक्षतान् ॥ नानाविधानि

दिव्यानि नानारत्नोज्ज्वलानि च ॥ भूषणानि गृह्हाणत्वंपार्वतीप्रियनन्दन ॥इत्याभरणं । तस्मादश्वाअजायंत० माल्यादीनिपुष्पाणि ॥ अथावरणपूजा ॥ गणाधिपाय नमः ॥ उमापुत्राय नमः ॥ अनघाय नमः ॥ हेरंबाय नमः ॥ गजवक्त्राय नमः ॥ सुमुखाय नमः ॥ एकदंताय- नमः ॥ कपिलाय नमः ॥ विकटाय नमः ॥ विघ्ननाशिने नमः ॥ धूम्रकेतवे नमः ॥ गणाध्यक्षाय नमः ॥ भालचंद्राय नमः ॥ ईशपुत्राय- नमः ॥ इभवक्त्राय नमः॥ मूषकवाहनाय नमः॥

कुमारगुरवे नमः ॥ श्रीसिद्धिविनायकाय नमः ॥
दयाब्धेत्राहि संसारसर्पान्मांशरणागतं ॥
भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं इतिप्रथ-
मावरणम् । विघ्नगणपतये नमः ॥ वीरगणपत-
ये नमः ॥ शूरगणपतये नमः ॥ विनायकगणप-
तये नमः ॥ वरद्गणपतये नमः ॥ इभवक्त्रगण
तये नमः ॥ लंबोदरगणपतये नमः ॥ क्षिप्रगण-
पतये नमः ॥ प्रसाद गणपतये नमः ॥ सिद्धगण
पतये नमः ॥ दयाब्धिगणपतये नमः ॥ दयाब्धे
त्राहि इतिद्वितीयावरणम् ॥ रमायै नमः ॥ रमे

शाय नमः ॥ गिरिजायै नमः ॥ शंकराय नमः ॥ वृषांकाय नमः ॥ रत्यै नमः ॥ मत्यै नमः ॥ पुष्पबाणाय नमः॥ वाराहाय नमः॥ सदाशिवाय नमः॥ दयाब्धे० इति तृतीयावरणम् ॥ सिद्ध्यै नमः ॥ समृद्ध्यै नमः ॥ कांत्यै नमः ॥ मदवत्यै नमः ॥ मदद्राविण्यैनमः ॥ सुधायै नमः ॥ वसुमत्यै नमः॥ सिद्धिविनायकाय नमः ॥ दयाब्धेत्रा० इति चतुर्थावरणम् ॥ सुराधिपतये नमः॥ इन्द्राय नमः ॥ तेजोधिपतये नमः ॥ अग्नये नम ॥ प्रेताधिपतये नमः ॥ रक्षोधिपतये नमः ॥ निर्ऋतये नमः ॥

जलाधिपतये नमः ॥ वरुणाय नमः ॥ प्राणाधि
पतये नमः ॥ वायवे नमः ॥ यज्ञाधिपतयें नमः ॥
कुबेराय नमः विश्वाधिपतये नमः॥ईशानायनमः॥
दयाब्धेत्राहिसं० ॥ इतिपंचमावरणम् ॥ अथांग
पूजा ॥गणेशायनमः पादौ पूजयामि ॥अघः नाश
नाय नमः जानुनीपूजयामि ॥ अघनाशिने नमः
कटिपूजयामि॥ लंबोदरायनमः नाभिपूजयामि॥
गणनायकायनमः हृदयंपूजयामि ॥ स्थूलकंठा
यनमः कंठंपूजयामि ॥ स्कंदाधिपायनमः
स्कधौपूजयामि ॥ परशुहस्ताय नमः हस्ता पूज
यामि ॥ गजवक्त्रायनमः वक्त्रंपूजयामि ॥ विघ्नने

त्रेनमः नेत्रंपूजयामि ॥ सर्वसिद्धिप्रदायकाय नमः ॥ मुखंपूजयामि ॥ सर्वेश्वराय नमः शिरः पूजयामिः ॥ श्रीमहागणपतयेनमः सर्वांगंपूजयामि ॥ अथएकविंशतिपत्रपूजा ॥ सुमुखाय नमः मालतीपत्रं समर्प्पयामि ॥ गणाधिपाय नमः भृंगराजपत्रं समर्प्पयामि ॥ उमापुत्राय नमः बिल्व॰ अजायनमः दूर्वापत्रं॰ विनायकाय नमः बदरीपत्रं॰ हरसूनवे नमः धत्तूरपत्रं॰ गजकर्णकाय नमः तुलसीपत्रं॰ गुहाग्रजाय नमः अपामार्गपत्रं॰ गजास्यायनमः बृहतीपत्रं॰ चित्रकामायनमः शमीपत्रं॰ लंबोदराय

नमः करवीरपत्रं॰ विकटायनमः अश्वत्थपत्रं॰ कपिलायनमः अर्कपत्रं॰ भिन्नदंतायनमः अर्ज्जुनपत्रं॰ पत्नीहीनायनमः विष्णुक्रांत पत्रं॰ बटवेनमःदाडिमपत्रं॰ गिरिजासुतायनमः देवदारुपत्रं॰ हेरंबायनमःसिंधुवारपत्रं॰ शूर्प्प कर्णायनमः जातीपत्रम् ॥ सुराग्रण्याय नमः गंधारीपत्रंसमर्प्पयामि ॥ २१ ॥ अथ एकविंश तिपुष्पपूजा ॥ सुमुखायनमः जातीपुष्पं सम र्प्पयामि ॥ एकदंतायनमः सेवंतिकापुष्पं॰ कपिलायनमः मालतीपुष्पं॰ शूर्प्पकर्णायनमः चंपकपुष्पं॰ लंबोदरायनमः कर्णिकापुष्पं॰

विकटायनमःकेतकीपुष्पं० विनायकाय नमः
बकुलपुष्पं० गणाधिपायनमः शतपुष्पं०धूमके
तवे नमः पुन्नागपुष्पं०वक्रतुंडायनमःधत्तूरपुष्पं०
भालचंद्रायनमः नागचंपकपु० गजकर्णिकाय
नमः करवीरपुष्पंसम० उमापुत्रायनमः पारि
जातपुष्पं० अघनाशिने नमः नागकेशर पु०
ईशपुत्राय नमः पद्मपुष्पं० सर्वसिद्धि प्रदायकाय
नमः मल्लिकापुष्पं० मूषकवाहनाय नमः॥
कल्हारपुष्पं० दर्शभोक्त्रे नमः गिरिकर्णिकापुष्पं
समर्पयामि॥ कुमारगुरवे नमः इन्द्रिकापुष्पं०

सिद्धिविनायकाय नमः मुनिपुष्पं० ॥ इत्येक
विंशतिपुष्पाणि ॥ यत्पुरुषंव्यदधुः ऋक् ॥ वन
स्पतिरसोद्भूतोगंधाढ्यः सुमनोहरः ॥ आघ्रेयः
सर्वदेवानांधूपोयं प्रतिगृह्यताम् ॥ इतिधूपम् ॥
ब्राह्मणोस्यमुख० ऋक्० साज्यंचवर्तिसंयुक्तंत
थाकर्पूरसंयुतम् ॥ दीपंज्ञानप्रदंचारुप्रीत्यर्थं प्रति
गृह्यताम् ॥ इतिदीपम्० चन्द्रमामनसो० ऋक् ॥
सघृतं सगुडं चैवमोदकं घृतपाचितम् ॥ नैवेद्यं
गृह्यतां देवनमस्तेविघ्ननाशन ॥ शर्कराखंडखा
द्यानीतिनैवेद्यं० मध्येपानीयम्० उत्तरापोशनं०

हस्तप्रक्षालनंसम० मुखप्रक्षालनंस म०करोद्वर्त
नार्थं चंदनं० पूगीफलंमहादिव्यं० इति पूगी
फलम् ॥ तांबूलंचवरंरम्यंकर्पूरादिसमन्वितम् ।
मयानिवेदितं भक्त्या तांबूलं प्रतिगृह्यताम् ॥
इति तांबूलं० हिरण्यगर्भगर्भस्थंहेमबीजंविभा
वसोः॥अनंतपुण्यफलदमतःशांतिं प्रयच्छमे ॥
इतिदक्षिणां०इदंफलंमयादेव० इतिफलं ॥ अथ
दूर्वापूजा ॥ तत्रायं प्रकारः ॥ दूर्वायुग्मंगृहीत्वातु
गंधपुष्पाक्षतैर्युतम् पूजयेत्सिद्धिविघ्नेशंप्रत्येकं
सर्व नामभिः ॥ अथ दूर्वामंत्रः । गणाधिपन

मस्तेऽस्तुउमापुत्राघनाशन ॥ विनायकेशपुत्रेति
सर्वसिद्धिप्रदायक ॥ एकदंते भवक्त्रेतितथा
मूषकवाहन ॥ कुमारगुरवे नित्यं पूजनीयः
प्रयत्नतः ॥ इति दूर्वा॰ चक्षुर्दं सर्वलोकस्येति
नीरांजन दीपम् ॥ नाभ्याआसीदितिनैवेद्यम् ॥
पुनः निषुसीदगण॰ ॐगणानांत्वाइति ऋक् ॥
मंत्रपुष्पं॰ सप्तास्यासन् इति ऋक् ॥ यानि
कानि चेति प्रदक्षिणा ॥ यज्ञेनेति ऋक् । नमो
स्त्वनंतायेति नमस्कारः ॥ यथात्वं सर्वदेवाना
मिन्द्रादीनांचरक्षक ॥ तथामांरक्षदेवेशगणाधि

पनमोस्तुते ॥ इतिनमस्कारप्रार्थना ॥ अथार्घ्य दानम्॥नमस्ते विघ्नराजेन्द्र नमस्तेधरणीधर ॥ नमस्तेवक्रतुंडाय गृहाणार्घ्यं नमोस्तुते ॥ इत्यर्घम् ॥ अथ प्रार्थना ॥ गजाननं बहुतशोभनं सिंदुरंच गजाननं विघ्नहरं सुखकरं च॥ गजाननं प्रियमोदकलड्डुकंच गजाननं भजतु मोक्षसुखकरंच ॥ गतं दुःखं गतं पापं आगताः सुखसंपदः ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यदर्चितो मया देव क्षम्यतां परमेश्वर ॥ अन्यथाशा० अनेन यथाज्ञानेन पुरुषसूक्तेन

मूलमंत्रेण पुराणोक्तमंत्रेण षोडशोपचारपूजनेन कृतेन श्रीमहागणपतिः प्रीयताम् ॥ श्रीगजाननः प्रसन्नो भवतु ॥

इति भाद्रशुक्लचतुर्थ्यां वरदगणेशपूजा समाप्ता ।

---

पुस्तकें मिलने के स्थान :-

खेमराज श्रीकृष्णदास
श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
७वीं खेतवाडी, खम्बाटा लेन,
बम्बई–४०० ००४

गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेंकटेश्वर प्रेस व बुक डिपो
अहिल्याबाई चौक, कल्याण
(जि० ठाणे–महाराष्ट्र)

खेमराज श्रीकृष्णदास, चौक–वाराणसी (उ० प्र०)

हमारे प्रकाशनों की अधिक जानकारी व खरीद के लिये हमारे निजी स्थान :


**खेमराज श्रीकृष्णदास**
अध्यक्ष : श्रीवेंकटेश्वर प्रेस,
९१/१०९, खेमराज श्रीकृष्णदास मार्ग,
७ वी खेतवाडी बँक रोड कार्नर, मुंबई - ४०० ००४.
दूरभाष/फैक्स-०२२-२३८५७४५६.

**खेमराज श्रीकृष्णदास**
६६, हडपसर इण्डस्ट्रियल इस्टेट,पुणे - ४११ ०१३.
दूरभाष-०२०-२६८७१०२५, फैक्स -०२०-२६८७४९०७.

**गंगाविष्णु श्रीकृष्णदास,**
**लक्ष्मी वेंकटेश्वर प्रेस व बुक डिपो**
श्रीलक्ष्मीवेंकटेश्वर प्रेस बिल्डिंग,
जूना छापाखाना गली, अहिल्याबाई चौक,
कल्याण, जि. ठाणे, महाराष्ट्र - ४२१ ३०१.
दूरभाष - ०२५१-२२०९०६१.

**खेमराज श्रीकृष्णदास**
चौक, वाराणसी (उ.प्र.) २२१ ००१. दूरभाष - ०५४२-२४२००७८.


KHEMRAJ SHRIKRISHNADASS